# श्रीगुरुकवचम्

{॥ श्रीगुरुकवचम् ॥}

॥ अथ पुरश्चरणरसोल्लासे ईश्वरदेवीसम्वादे श्रीगुरुकवचम् ॥

पूर्वपीठिका

॥ श्रीईश्वर उवाच ॥

श्रृणु देवि! प्रवक्ष्यामि, गुह्याद्गुह्यतरं महत् ।

लोकोपकारकं प्रश्नं, न केनापि कृतं पुरा ॥ १॥

अद्य प्रभृति कस्यापि, न ख्यातं कवचं मया ।

देशिकाः बहवः सन्ति, मन्त्रसाधनतत्पराः ॥ २॥

न तेषां जायते सिद्धिः, मन्त्रैर्वा चक्रपूजनैः ।

गुरोर्विधानं कवचमज्ञात्वा क्रियते जपः ।

वृथाश्रमो भवेत् तस्य, न सिद्धिर्मन्त्रपूजनैः ॥ ३॥

गुरुपादं पुरस्कृत्य, प्राप्यते कवचं शुभम् ।

तदा मन्त्रस्य यन्त्रस्य, सिद्धिर्भवति तत्क्षणात् ।

सुगोप्यं तु प्रजप्तव्यं, न वक्तव्यं वरानने ॥ ४॥

॥ सविधि श्रीगुरुकवचस्तोत्रम् ॥

विनियोगः --

ॐ नमोऽस्य श्रीगुरुकवचनाममन्त्रस्य परमब्रह्म ऋषिः,

सर्ववेदानुज्ञो देवदेवो श्री आदिशिवः देवता, नमो हसौं

हंसः ह-स-क्ष-म-ल-व-र-यूं सोऽहं हंसः बीजं,

स-ह-क्ष-म-ल-व-र-यीं, शक्तिः,हंसः सोऽहं कीलकं,

समस्तश्रीगुरुमण्डलप्रीत्यर्थे जपे विनियोगः ।

ऋष्यादिन्यासः --

श्रीपरमब्रह्मर्षये नमः शिरसि । सर्ववेदानुज्ञदेवदेव

श्री आदिशिवदेवतायै नमः हृदि । नमः हसौं हंसः

ह-स-क्ष-म-ल-व-र-यूं सोऽहं हंसः बीजाय नमः गुह्ये ।

स-ह-क्ष-म-ल-व-र-यीं शक्तये नमः नाभौ । हंसः सोऽहं

कीलकाय नमः पादयोः । समस्तश्रीगुरुमण्डलप्रीत्यर्थे जपे विनियोगाय

नमः अञ्जलौ ।

अथ षडङ्गन्यासः ।

ॐ हसाम् । ॐ हसीम् । ॐ हसूम् । ॐ हसैम् । ॐ हसः ।

अथ करन्यासः ।

ॐ अङ्गुष्ठाभ्यां नमः । ॐ तर्जनीभ्यां नमः । ॐ मध्यमाभ्यां नमः ।

ॐ अनामिकाभ्यां नमः । ॐ कनिष्ठाभ्यां नमः ।

ॐ करतलकरपृष्ठाभ्यां नमः ।

अथ अङ्गन्यासः ।

हृदयाय नमः । शिरसे स्वाहा । शिखायै वषट् ।

कवचाय हुं । नेत्रत्रयाय वौषट् । अस्त्राय फट् ।

ध्यानम् --

श्रीसिद्धमानवमुखा गुरवः स्वरूपं,

संसारदाहशमनं द्विभुजं त्रिनेत्रम् ।

वामाङ्गशक्तिसकलाभरणैर्विभूषं

ध्यायेज्जपेत् सकलसिद्धिफलप्रदं च ॥

मानसपूजन --

लं पृथिव्यात्मकं गन्धतन्मात्रप्रकृत्यात्मकं गन्धं सशक्तिकाय श्रीगुरवे समर्पयामि नमः, हं आकाशात्मकं शब्दतन्मात्रप्रकृत्यात्मकं पुष्पं सशक्तिकाय श्रीगुरवे समर्पयामि नमः, यं वाय्वात्मकं स्पर्शतन्मात्रप्रकृत्यात्मकं धूपं सशक्तिकाय श्रीगुरवे घ्रापयामि नमः, रं वह्न्यात्मकं रूपतन्मत्रप्रकृत्यात्मकं दीपं सशक्तिकाय श्रीगुरवे समर्पयामि नमः, वं अमृतात्मकं रसतन्मात्रप्रकृत्यात्मकं नैवेद्यं सशक्तिकाय श्रीगुरवे समर्पयामि नमः, सं सर्वात्मिकां ताम्बूलादिसर्वोपचारपूजां सशक्तिकाय श्रीगुरवे समर्पयामि नमः ।

॥ कवचस्तोत्रम् ॥

ॐ नमः प्रकाशानन्दनाथः तु, शिखायां पातु मे सदा ।

परशिवानन्दनाथः, शिरो मे रक्षयेत् सदा ॥ १॥

परशक्तिदिव्यानन्दनाथो भाले च रक्षतु ।

कामेश्वरानन्दनाथो, मुखं रक्षतु सर्वधृक् ॥ २॥

दिव्यौघो मस्तकं देवि! पातु सर्वशिरः सदा ।
कण्ठादिनाभिपर्यन्तं, सिद्धौघा गुरवः प्रिये ॥ ३॥

भोगानन्दनाथ गुरुः, पातु दक्षिणबाहुकम् ।
समयानन्दनाथश्च, सन्ततं हृदयेऽवतु ॥ ४॥

सहजानन्दनाथश्च, कटिं नाभिं च रक्षतु ।
एष स्थानेषु सिद्धौघाः, रक्षन्तु गुरवः सदा ॥ ५॥

अधरे मानवौघाश्च, गुरवः कुलनायिके!
गगनानन्दनाथश्च, गुल्फयोः पातु सर्वदा ॥ ६॥

नीलौघानन्दनाथश्च, रक्षयेत् पादपृष्ठतः ।
स्वात्मानन्दनाथगुरुः, पादाङ्गुलीश्च रक्षतु ॥ ७॥

कन्दोलानन्दनाथश्च, रक्षेत् पादतले सदा ।
इत्येवं मानवौघाश्च, न्यसेन्नाभ्यादिपादयोः ॥ ८॥

गुरुर्मे रक्षयेदुर्व्यां, सलिले परमो गुरुः ।
परापरगुरुर्वह्नौ, रक्षयेत् शिववल्लभे ॥ ९॥

परमेष्ठीगुरुश्चैव, रक्षयेत् वायुमण्डले ।

शिवादिगुरवः साक्षात्, आकाशे रक्षयेत् सदा ॥ १०॥

इन्द्रो गुरुः पातु पूर्वे, आग्नेयां गुरुरग्नयः ।
दक्षे यमो गुरुः पातु, नैरृत्यां निरृतिर्गुरुः ॥ ११॥

वरुणो गुरुः पश्चिमे, वायव्यां मारुतो गुरुः ।
उत्तरे धनदः पातु, ऐशान्यामीश्वरो गुरुः ॥ १२॥

ऊर्ध्वं पातु गुरुर्ब्रह्मा, अनन्तो गुरुरप्यधः ।
एवं दशदिशः पान्तु, इन्द्रादिगुरवः क्रमात् ॥ १३॥

शिरसः पादपर्यन्तं, पान्तु दिव्यौघसिद्धयः ।
मानवौघाश्च गुरवो, व्यापकं पान्तु सर्वदा ॥ १४॥

सर्वत्र गुरुरूपेण, संरक्षेत् साधकोत्तमम् ।
आत्मानं गुरुरूपं च, ध्यायेन् मन्त्रं सदा बुधः ॥ १५॥

॥ फलश्रुतिः ॥

इत्येवं गुरुकवचं, ब्रह्मलोकेऽपि दुर्लभम् ।
तव प्रीत्या मया ख्यातं, न कस्य कथितं प्रिये ॥ १॥

पूजाकाले पठेद् यस्तु, जपकाले विशेषतः ।

त्रैलोक्यदुर्लभं देवि । भुक्तिमुक्तिफलप्रदम् ॥ २॥

सर्वमन्त्रफलं तस्य, सर्वयन्त्रफलं तथा ।

सर्वतीर्थफलं देवि । यः पठेत् कवचं गुरोः ॥ ३॥

अष्टगन्धेन भूर्जे च, लिख्यते चक्रसंयुतम् ।

कवचं गुरुपङ्क्तेस्तु, भक्त्या च शुबवासरे ॥ ४॥

पूजयेत् धूपदीपाद्यैः, सुधाभिः सितसंयुतैः ।

तर्पयेत् गुरुमन्त्रेण, साधकः शुद्धचेतसा ॥ ५॥

धारयेत् कवचं देवि! इह भूतभयापहम् ।

पठेन्मन्त्री त्रिकालं हि, स मुक्तो भवबन्धनात् ।

एवं कवचं परमं, दिव्यसिद्धौघकलावान् ॥ ६॥

॥ इति पुरश्चरणरसोल्लासे ईश्वरदेवीसम्वादे श्रीगुरुकवचं सम्पूर्णम् ॥

]hrule

Encoded and proofread by PP

Please send corrections to sanskrit@cheerful.com

Last updated त्oday

